E 78

काश्मीर-संस्कृतग्रन्थावलिः



ग्रन्थाङ्कः १२



# कामकलाविलासः

015,1PUN,1
E8




78
E

काश्मीर-श्रीनगर

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# KASHMIR SERIES OF TEXTS AND STUDIES.

No. XII.

THE

# KĀMA KALĀ VILĀS

OF

**PUNYA NANDA**

WITH COMMENTARY.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
SIR PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.

---

(*All rights reserved.*)

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI,
Acc. No. ......7024...
5230

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[library stamp, illegible]

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२

# कामकलाविलासः

श्रीमत्पुण्यानन्दाचार्यविरचितः

सटीकः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये

तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

मुम्बय्यां

तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर

अस्य ग्रन्थस्य सर्वे प्रकाशन-मुद्रापणाद्यधिकाराः प्रोक्तमहाराजवर्यैः स्वायत्तीकृताः सन्ति )

चौखम्बा संस्कृत पुस्तकालय

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ॐ नमः शिवाय क्रमाक्रमात्मसंविन्मूर्तये ।

अथ

# कामकलाविलासः

श्रीमत्पुण्यानन्दाचार्यविरचितः ।

क्रमत्रयसमाश्रयव्यतिकरेण या संततं
क्रमत्रितयलङ्घनं विदधती विभात्युच्चकैः ।
क्रमैकवपुरक्रमप्रकृतिरेव या द्योतते
करोमि हृदि तामहं भगवतीं परां संविदम् ॥

सकलभुवनोदयस्थिति-
लयमयलीलाविनोदनोद्युक्तः ।
अन्तर्लीनविमर्शः
पातु महेशः प्रकाशमात्रतनुः ॥ १ ॥

अत्र पुण्यानन्दयोगिनः सकलविद्याधिदैवतभूतात्रिपुरसुन्दरीमन्त्रचक्रव्याचिकीर्षिततया तदधिष्ठानभूतकामकामेश्व-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रीरूपौ आदौ आचक्षते। सकलेत्यादि, सकलानां भुवनानाम् उदयः सर्गः, स्थितिः रक्षा, लयो नाशः, एतत् त्रितयं निरोधानुग्रहयोरुपलक्षणम्, एतत्पञ्चविधकृत्यप्रचुरा या लीला तया विनोदनं क्रीडनं तस्मिन् उद्युक्तो जागरूकः, मयट् अत्र प्राचुर्यार्थे विहितः। एवं च सति जगद्व्यतिरिक्तलक्षणं ब्रह्मस्वरूपं कीदृशम्? इत्याकाङ्क्षायाम् आह—अन्तर्लीनविमर्श इत्यादिना, विमृश्यते परामृश्यते इदमिति विमर्शः प्रपञ्चः, इद मित्येवं परमात्मना सृष्टस्य जगतः प्रसिद्धः परामर्शः, एवंभूतो यो विमर्शः प्रपञ्चः अन्तर्लीनोऽन्तर्गतो यस्य स अन्तर्लीनविमर्शः। तदयमत्रार्थः—स्वात्मसात्कृताखिलप्रपञ्चः परिपूर्णाहंभावभावनागर्भितः, अथ वा जगदुत्पत्तिस्थितिलयहेतुभूताकृत्रिमाहमिति परामर्शो विमर्शः। तथा च नागानन्दाः

'विमर्शो नाम विश्वाकारेण विश्वप्रकाशेन विश्वसंहारेण वा अकृत्रिमाहमिति विश्वस्फुरणम्,
तस्य अन्तर्लीनत्वं नाम अन्तर्मुखत्वम्।'

तथा च अयमर्थः—अन्तर्लीनः अन्तर्मुखो विमर्शः पूर्णाहंभावो यस्य इति, तत्तादृशपरब्रह्मणः परमेश्वरस्य प्रकाशैकस्वभावत्वं सर्वस्मात्परत्वं च आह—प्रकाशमात्रतनुः इति, अत्र प्रकाशत्वं नाम—इच्छामि जानामि करोमि इति उत्तमपुरुषा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्तर्गतस्फुरणरूपाहंपरामर्श एव। ननु सूर्यादीनामपि प्रकाशत्वं दृष्टं तत्कथम् अस्यैव परमात्मत्वम्? अत आह—महेश इति, महांश्चासौ ईश इति महेशः, महत्त्वं च देशकालाकारैरनवच्छिन्नस्वरूपत्वात्, ईशत्वं सर्वनियन्तृत्वात् इति ॥ १ ॥

पराभट्टारिकायामपि सर्वाकारत्वमाह

सा जयति शक्तिराद्या
निजसुखमयनित्यनिरुपमाकारा ।
भाविचराचरबीजं
शिवरूपविमर्शनिर्मलादर्शः ॥ २ ॥

सा आद्या शक्तिः अनवच्छिन्ना पराभट्टारिका महात्रिपुरसुन्दरी, जयति सर्वोत्कर्षेण वर्तते, सा इति शिवादि-क्षित्यन्तषट्त्रिंशत्तत्त्वमयी सर्वप्रपञ्चात्मिका तदुत्तीर्णा च, इति—सर्वोपनिषत्प्रसिद्धा त्रिपुरा अभिधीयते, त्रिभ्यस्तेजोभ्यः पुरा भूता त्रिपुरा इति निगद्यते, तस्याश्च सर्वोत्कृष्टत्वं सर्वत्र आगमेषु उद्घोष्यते। एतदेव विवृणोति—निजेत्यादिना, निजः स्वाभाविकः सुखमयः दुःखसंभिन्नो नित्यः सार्वकालिकः निरुपमो निरवधिक आकारः स्वरूपं यस्याः । भाविचरा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चरबीजं—भाविनोः संपत्स्यमानयोः चराचरयोः स्थावर-जङ्गमयोर्बीजं योनिः कारणमित्यर्थः। ननु शिवस्य यथा जगन्निर्मातृत्वं शक्त्या विना न संगच्छते, एवं पराशक्तेरपि परमशिवेन विना कारणत्वं न भवेत् इति, तत्कथमुच्यते भाविचराचरबीजम् इति? अत आह—शिवरूपविमर्शनिर्मलादर्श इति, शिवस्य स्वरूपम् अहमित्येवमाकारं तस्य विमर्शः परामर्शनम् अहमित्येवं-रूपं ज्ञानं तस्य प्रकाशने निर्मलादर्शः सम्यक्प्रकाशनचतुर इत्यर्थः। यथा कश्चित् राजा अतिसुन्दरः स्वात्माभिमुखस्थितस्वच्छादर्शतले स्वात्मप्रतिबिम्बं सम्यक् प्रसमीक्ष्य तत्प्रतिबिम्बम् अहमिति जानाति, एवं परमेश्वरोऽपि स्वाधीनभूतां स्वात्मशक्तिं सम्यक् अवलोक्य स्वस्वरूपम् अवगच्छति ॥ २ ॥

परिपूर्णोऽहम् इति विमर्शमेव ब्रह्म वदन्ति केचन तत्कथमुच्यते—सविमर्शकं ब्रह्म? इत्यत आह

---

स्फुटशिवशक्तिसमागम-
बीजाङ्कुररूपिणी पराशक्तिः।
अणुतररूपानुत्तर-
विमर्शलिपिलक्ष्यविग्रहा भाति ॥ ३ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अत्र पराशब्देन प्रकृता ख्याता महात्रिपुरसुन्दरी अभिधीयते – चिदानन्देच्छाज्ञानक्रियारूपा, इति श्रुतिप्रसिद्धितया एवमुच्यते – स्फुटशिवशक्तिसमागमबीजाङ्कुररूपिणीति, शिवश्च शक्तिश्च शिवशक्ती तयोः समागमः संयोगः स्फुटः व्यक्तः शिवशक्तिसमागमोऽयं, तेन बीजाङ्कुररूपिणीति, बीजादङ्कुरं अङ्कुराद्बीजम् इतिवत् शिवतत्त्वादि-क्षितितत्त्वपर्यन्तं तत्त्वजालम् उत्तरोत्तरम् उद्भावयेत् इत्यर्थः, अत्र शिवशब्देन ज्ञानशक्तिरभिधीयते ज्ञानशक्त्यधिष्ठानत्वात् शिवतत्त्वस्य, शक्तिशब्देनापि क्रियाशक्तिरभिधीयते क्रियाशक्त्यधिष्ठानत्वात् शक्तितत्त्वस्य – चिदानन्दस्वरूपिण्याः सर्वत्र ज्ञानक्रियाभ्यामेव निर्माणौचित्यदर्शनात् । पुनस्तामेव विशिनष्टि – 'अणुतररूपानुत्तरविमर्शलिपिलक्ष्यविग्रहा भाति' – अणुतरम् अत्यन्तसूक्ष्मरूपम् अस्या इति – अनुत्तरलिपिः अकारः विमर्शलिपिः हकारः ताभ्यां लक्ष्यं विग्रहं स्वरूपं यस्याः तथोक्ता । अत्र अनुत्तरविमर्शलिपिलक्ष्यविग्रहा इत्यनेन अहमात्मिकान्तर्गर्भितसमस्तवर्णकदम्बका पराशक्तिः अकारादि-हकारान्तं पञ्चाशदक्षररूपिणी वर्ण-पद-मन्त्र-कला-तत्त्व-भुवनात्मकसमस्तप्रपञ्चजनयित्री पराभट्टारिका समस्तभूतान्तरात्मा सर्वत्र वेदान्ते 'अहमहम्' इत्येवमाकारेण प्रतीयमाना दृश्यते इत्युक्तं भवति ।। ३ ।।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इतः परं प्रबन्धेन प्रधानप्रतिपाद्यां कामकलाक्षररूपिणीमेव कामः शिवः तदक्षररूपां वक्तुमुपक्रमते,–'परशिवरविकर इत्यादि, कला च दहनेन्दुविग्रहौ बिन्दू' इत्यन्तम्

---

परशिवरविकरनिकरे
प्रतिफलति विमर्शदर्पणे विशदे ।
प्रतिरुचिरुचिरे कुड्ये
चित्तमये निविशते महाबिन्दुः ॥४॥

---

परशिवः प्रकाशैकस्वभावः परमशिवभट्टारक एव रविर्दिनकरः तस्य कराः किरणाः तेषां निकरः पुञ्जः, तस्मिन् विशदे निर्मले विमर्शदर्पणे, विमर्शो नाम अनवधिरेका विस्फुरणशक्तिः, तथा प्रत्यभिज्ञायाम्

'सा स्फुरत्ता.................................... ।'

इत्यादिनैव दर्पणत्वेन निरूप्यते – स्वस्वरूपप्रकाशत्वात् । तत्र प्रतिफलनं नाम स्वरूपावलोकनं, तादृशप्रतिफलनरूपावलोकने सति, चित्तमये – ज्ञानैकस्वरूपे, प्रतिरुचिरुचिरे–प्रतिप्रकाशमनोहरे, कुड्ये, महाबिन्दुः निविशते प्रतिष्ठितो भवति । चित्तस्य कुड्यत्वनिरूपणं महाबिन्द्वाविर्भावकारणत्वात्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लोकऽपि सूर्याभिमुखस्थितदर्पणतले सूर्यकिरणप्रतिफलनानन्तरं निकटगतकुड्ये सूर्यकिरणप्रतिहततेजोविन्दुः प्रत्यक्षं प्रपद्यते, तद्वत् प्रकाशरूपपरमेश्वरस्य दर्पणवत् स्वरूपविमर्शसंवन्धे जाते तदानीं तत्र महाविन्दुः 'पूर्णोऽहम्' इत्येवंरूपः परमेश्वरोऽवभासते इत्यर्थः । आगमश्च

'स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य संभवः ।'

इति । प्रत्यभिज्ञायामपि

'सा स्फुरत्ता महासत्ता........................ ।'

इत्यादि । परमानन्दयोगिनोऽपि

'ईदृगियत्तादिवचो दूरतरं स्वानुभूतिसंवेद्यम् ।
तत्तादृशस्फुरत्ताशेषा संवित्कथं नु सा वाच्या ॥'

इत्यादि ॥ ४ ॥

तादृगुज्ज्वलात्मशक्त्यवलोकनोद्भूताहम्भावमेव विशिनष्टि

---

चित्तमयोऽहंकारः
सुव्यक्ताहार्णसमरसाकारः ।
शिवशक्तिमिथुनपिण्डः
कवलीकृतभुवनमण्डलो जयति ॥५॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'अहंकार इति' उद्भूतान्यस्मरणानुभवव्यञ्जको योऽयम् अहमहमित्येव विमर्शः तस्य कारः कारणम्, एवं-भूतोऽहंकारो जयति सर्वोत्कर्षेण वर्तते। यतः

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।'

चित्तमयः ज्ञानैकस्वभावः सुव्यक्ताहार्णसमरसाकारः, अश्च हश्च इत्यहौ सुतरां व्यक्तौ स्पष्टौ परस्परोद्भूतरूपौ सुव्यक्ताहौ एव लोलीभवतो यत्र सः शिवशक्तिमिथुनपिण्डः, अत एव कवलीकृतभुवनमण्डलः, अन्तःस्थापितं भुवनमण्डलं षट्त्रिंशत्तत्त्वसंघातमयं येन सः। अयमर्थः—प्रत्याहारन्यायेन अन्तर्गर्भितसमस्तवर्णकदम्बकाहंकाररूपप्रकाशविमर्शसंपुटादेव शब्दार्थात्मकसर्वप्रपञ्चविकासो भवति। तथा च श्रुतिः

'एको वर्णो बहुधा शक्तियोगाद्-
वर्णाननेकान्निहितार्थो दधाति।'

इति ॥ ९ ॥

इतः परं 'चित्तमये निविशते महाबिन्दुः' इति यदुक्तम् तत्र बिन्दुस्वरूपनिरूपणद्वारा कामकलाम् उपदिशति

---

सितशोणबिन्दुयुगलं
विविक्तशिवशक्तिसंकुचत्प्रसरम्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वागर्थसृष्टिहेतुः
परस्परानुप्रविष्टविस्पष्टम् ॥ ६ ॥

---

बिन्दुरहंकारात्मा
रविरेतन्मिथुनसमरसाकारः ।
कामः कमनीयतया
कला च दहनेन्दुविग्रहौ बिन्दू ॥ ७ ॥

---

सितः शुभ्रः, शोणो रक्तः, तद्रूपौ विन्दू, तयोर्युगलम्, अत एव विविक्तशिवशक्ति—अन्योन्यविहरणपरे शिवशक्ती यस्मिन् कर्मणि तत्, अत एव संकुचत्प्रसरं—संकुचन् मुकुलीभवन् प्रसरः जगत्सृष्टिरूपो यस्मिन् तत्, वाचः—परा-पश्यन्त्यादिरूपसमस्तशब्दाः, अर्थाः—शिवादि-क्षित्यन्तषट्त्रिंशत्तत्त्वरूपाः, तेषां सृष्टिः षडध्वात्मकजगन्निर्मितिः, तत्र हेतुः कारणम्। परस्परानुप्रविष्टविस्पष्टम्—परस्परम् अन्योन्यम् अनुप्रविष्टम् अन्तर्गतं विस्पष्टं पृथग्भूतं च तत्, एवं-भूतं सितशोणबिन्दुयुगलं—कामकामेश्वरीरूपं दिव्यमिथुनं, विभावयेत् इति पूर्वेण संबन्धः । अत्र इदमतिरहस्यम् ।

'यः परः स महेश्वरः ।'

इति श्रुत्युक्तरीत्या निखिलवेदादिशब्दोत्पादकानुत्तराभिधेयः



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परमेश्वरः स्वाङ्गभूताखिलप्रपञ्चविलयात्मकविमर्शशक्तिम् अनुप्रविश्य बिन्दुभावं मन्यते, ततः सा विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमयाबिन्दुम् अनुप्रविशति, ततश्च बिन्दुरुत्पन्नो भवति, तस्माद्बिन्दोः नादात्मिका समस्ततत्त्वगर्भिणी तेजोमयी जीवरूपा बालाग्रवत् सूक्ष्मरूपिणी इति गत्या शृङ्गाटकरूपताम् उद्गृह्णाति । एवं च बिन्दुनादस्वरूपयोस्तयोः प्रकाशविमर्शयोरहमिति शरीरं भवति, एवं द्विरूपयोस्तयोर्मध्ये एको विमर्शो रक्तबिन्दुरूपतां भजते, अपरः प्रकाशः शुक्लबिन्दुभावम् एति, उभयोर्मेलने मिश्ररूपं सर्वतेजोमयं परमात्मस्वरूपं भवति । श्रुतिरपि

'एको वर्णो बहुधा शक्तियोगात्
वर्णाननेकान् निहितार्थो दधाति ।'

इति ।

एतदेव बिन्दुत्रयनिरूपणं विवृणोति, — बिन्दुरहंकारात्मा इति, बिन्दुः सितरक्तस्वरूपः अहंकारात्मा अन्तर्गर्भितसमस्तवर्णराशिः अनुत्तरस्फाररूपाहंकारः आत्मा तादात्म्यस्वरूपं यस्य सः । 'वर्णात्कारः' इति सूत्रेण अहं-शब्दात् कारशब्दप्रत्ययः ऐकार इतिवत्, अत एव एतन्मिथुनसमरसाकारः — एतयोरकार-हकारवाच्ययोः प्रकाशविमर्शयोर्मिथुनं द्वन्द्वं, तस्य दिव्यदम्पतिरूपस्य मिथुनस्य समरसः परस्परानुप्रवेशरूपम् आनुकूल्यं तदेव आकारः स्वरूपं यस्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सः, एवंभूतो रविः सितशोणविन्दुसमरसीभूतो मिश्रविन्दुरित्यर्थः। लोके हि सूर्यस्य मिश्रस्वरूपत्वम् अग्नीषोमयोः, अत एव तस्य उपास्यत्वमाह, – काम इति, काम्यते अभिलष्यते स्वात्मत्वेन परमार्थमहद्भिर्योगिभिरिति कामः, तत्र हेतुः – कमनीयतया इति, कमनीयत्वं स्पृहणीयत्वम् तेन। कला विमर्शशक्तिः दहनो वह्निः, इन्दुश्चन्द्रः तावेव आकारौ ययोर्विन्द्वोर्दहनेन्दुविग्रहौ विन्दू। अत्रायमर्थः – अग्नीषोमरूपिणी विमर्शशक्तिः तदुभयभूतकामेश्वराविनाभूता महात्रिपुरसुन्दरी विन्दुसमष्टिरूपा कामकला इति उच्यते, सैव उपास्यतया सर्वागमेषु उद्घोष्यते। उक्तं च

'मिहिरबिन्दुमुखीं तदधो लस-
च्छशिहुताशनबिन्दुयुगस्तनीम्।
ह-सपरार्धकलारचनास्पदां
भजत नित्यमिमां परदेवताम्॥'
'एकारोर्ध्वगतो बिन्दुर्मुखं भानुरधोगतौ।
स्तनौ दहनशीतांशू योनिर्हार्धकला भवेत्॥'

इत्यादि रहस्यम्। अयमत्र निष्कर्षः – स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी प्रकाशानन्दसारा बिन्दुत्रयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी मातृका परमयोगिभिः महामाहेश्वरैरनिशम् अनुसन्धेया इति। विज्ञानभट्टारकेऽपि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'बिन्दुरूपस्य चक्रस्य स्थूलवर्णक्रमेण तु ।
अर्धेन्दुबिन्दुनादान्तशून्योच्चाराद्भवेच्छिवः ॥'

इति ॥ ७ ॥

एवं बिन्दुस्वरूपम् उद्दिश्य ज्ञानोपासनायाः फलं परं-ब्रह्मभाव एव इत्याह

---

इति कामकलाविद्या
देवीचक्रक्रमात्मिका सेयम् ।
विदिता येन स मुक्तो
भवति महात्रिपुरसुन्दरीरूपः ॥ ८ ॥

---

पूर्वोक्तमहाप्रबन्धेन व्याख्याता कामकला – महात्रिपुरसुन्दरी, तस्या विद्या ज्ञानं, कीदृशी,? इत्याकाङ्क्षायामाह – देवीचक्रक्रमात्मिका – देव्याः त्रिपुरसुन्दर्याश्चक्रं श्रीचक्रं तस्य क्रमः चक्रमन्त्रदेवतात्मनाभिहितः सर्वानन्दमयादिसमस्तप्रकटपर्यन्तरूपः तदात्मिका तद्विषयिणी, येन – शक्तिपातात् ब्रह्मजिज्ञासुना भावयता पुरुषेण, विदिता अवगता, स पुरुषो मुक्तो भवति,

'विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त एव सः ।'

इति प्रत्यभिज्ञास्थित्या संसारवासनानिरसनपटीयोऽनवरत-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परिपूर्णाहंभावभावनाकवलीकृतसर्वप्रपञ्चः परमयोगी विहरते, अन्तेऽपि महात्रिपुरसुन्दरीरूपः — पराभट्टारिकात्मसारूप्यो भवति ॥ ८ ॥

परमार्थभूतप्रकृतबिन्दोरेव सकाशात् जगदुत्पत्त्यादिकं वक्तुम् आरभते

---

स्फुरितादरुणाद्बिन्दो-
नदब्रह्माङ्कुरारवो व्यक्तः ।
तस्माद्गगन-समीरण-
दहनोदक-भूमि-वर्णसंभूतिः ॥ ९ ॥

---

स्फुरितात् उच्छूनात्, बिन्दोः पूर्वोक्तलक्षणात्, नादब्रह्माङ्कुरः — नादः सर्वशब्दोत्पत्तिहेतुर्वर्णः स एव ब्रह्म, तत् ब्रह्म अङ्कुर उत्पादकं यस्य सः । तथा च उक्तम्

'एको नादात्मको वर्णः सर्वनादाविभागवान् ।
सोऽनस्तमितरूपत्वादनाहत इति श्रुतः ॥'

इति । एवं-भूतनादब्रह्मात्मक आरवः शब्दः पश्यन्त्यादिरूपो, व्यक्त आविर्भूतः, तस्मात् शब्दात्, गगन-समीरण-दहनोद-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कभूमीनां पञ्चभूतानां, वर्णानाम् आदि-क्षान्ताक्षराणां च संभूतिरुत्पत्तिराम्नाता ॥ ९ ॥

एवं शोणबिन्दोः सर्वात्मत्वं सर्वस्रष्टृत्वम् चोक्त्वा, तदिह शुभ्रबिन्दोरपि तत्स्वरूपम् अतिदिशति

---

अथ विशदादपि बिन्दो-
गंगनानिल-वह्नि-वारि-भूमिजनिः ।
एतत्पञ्चकविकृति
जगदिदमण्वाद्यजाण्डपर्यन्तम् ॥ १० ॥

---

विशदात् सर्वप्रकाशात्, बिन्दोः पूर्वव्याख्यातात्, गगनादिपञ्चभूतात्मकानन्तब्रह्माण्डानि आविर्भावतिरोभावौ भजन्त इत्यर्थः । तथा च आगमः

'स्वेच्छाविलसितानन्तजगद्रश्मिविलासवत् ।
नौमि संविन्महापीठं शिवशक्तिपराश्रयम् ॥'

इति ॥ १० ॥

एवं बिन्दुद्वयाभेदम् उक्त्वा, तद्दृष्टान्ततया मन्त्रदेवतयोरपि ऐक्यमाह

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बिन्दुद्वितयं यद्वद्
भेदविहीनं परस्परं तद्वत् ।
विद्यादेवतयोरपि
न भेदलेशोऽस्ति वेद्यवेदकयोः ॥११॥

---

विन्दुद्वितयं – पूर्वोक्तप्रकाशविमर्शात्मकं, यद्वत् – येन प्रकारेण, भेदविहीनं

'शिवशक्तिरिति ह्येतत्तत्त्वमाहुर्मनीषिणः ।'

इत्युक्तनीत्या परस्पराश्लिष्टं, तद्वत् तेनैव प्रकारेण, विद्यादेवतयोः – विद्या पञ्चदशाक्षरी देवता महात्रिपुरसुन्दरी तयोर्वेद्यवेदकयोः वाच्यवाचकयोः, भेदलेशोऽपि – ईषद्वैलक्षण्यमपि नास्ति, एवम् अभिन्ननादादिमिथुनात् अखिलं जगत् आविर्भवति इति ॥ ११ ॥

तदेव मिथुनम् आत्मेच्छयैव स्वभेदमस्वभेदमकरोत् इत्याह

---

वागर्थौ नित्ययुक्तौ
परस्परं शक्तिशिवमयावेतौ ।
सृष्टिस्थितिलयभेदौ
त्रिधा विभक्तौ त्रिबीजरूपेण ॥ १२ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाक् वर्ण-पद-मन्त्ररूपा, अर्थः कला-तत्त्व-भुवनात्मा, एतद्रूपत्वं कुतः?—प्रकाशविमर्शात्मकशब्दार्थाभ्यामेव षडध्वात्मकसर्वप्रपञ्चोत्पत्तिश्रवणात्, अत एव नित्ययुक्तौ निरन्तरसंसक्तौ, नहि घटपटयोरिव कादाचित्कः संबन्धः, तथा सति सर्वोत्पत्तिप्रसंगः। सृष्टिस्थितिलयभेदौ—सृष्टिः शिवादिक्षितिपर्यन्ततत्त्वजालाविर्भावः, स्थितिः तत्परिपालनं, लयस्तेषां स्वात्मसात्कारः एवं-भूतो भेदो ययोस्तौ। स्वात्मत्वं तु एतेषां त्रयाणां, तथा च अभिनवगुप्तपादाः

'स्वात्मगाः सृष्टिसंहाराः स्वरूपत्वेन संस्थिताः।'

इति। परस्परं शक्तिशिवमयौ प्रकाशविमर्शस्वरूपौ, उभयोरेकत्वात् वह्निदाहकत्ववत् तत्त्वान्तरं न भवति इत्यर्थः। अभियुक्तोक्तिश्च

'तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव।'

इति। एतौ पूर्वोक्तौ प्रकाशविमर्शौ त्रिधा त्रिप्रकारेण संस्थितौ, विभक्तौ पृथग्भूतौ। केन? इत्याह—त्रिबीजरूपेणेति, वाग्भव-कामराज-शक्तिबीजात्मकत्वेन इत्यर्थः। अयमर्थः—बिन्दुत्रयसमष्टिभूतकामकलाक्षररूपिणी महात्रिपुरसुन्दरी सर्वोपास्या इति ॥ १२ ॥

इतः परं वाग्भवादिखण्डत्रयान्तर्गतवस्तुविशेषवर्णनद्वारा श्रीपञ्चदशाक्षरीविद्याम् उद्धर्तुम् उपक्रमते

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

माता मानं मेयं
बिन्दुत्रयं भिन्नबीजरूपाणि ।
धामत्रय-पीठत्रय-
शक्तित्रयभेदभावितान्यपि च ॥१३॥

---

तेषु क्रमेण लिङ्ग-
त्रयं तद्वच्च मातृकात्रितयम् ।
इत्थं त्रितयपुरीया
तुरीयपीठा च भेदिनी विद्या ॥१४॥

---

माता अवकाशगत ईश्वरः, मानं तदवगतिसाधनभूता विद्या, मेयं ज्ञायमाना महात्रिपुरसुन्दरी, एवं मातृमानमेय-भावम् अनुभूय विहरति । धामत्रयं वाग्भवादिकम्, पीठत्रयं कामगिर्यादि, शक्तित्रयम् इच्छादि, एवमादिभेदेन भावितानि, बिन्दुमयत्वात् एतेषां, तेषु धामादिषु विभिन्नेषु, क्रमेण आनुपूर्व्या, लिङ्गत्रयं स्वायंभुवादि, मातृकात्रितयमकारवि-भेदभिन्नम्, एवंविधसमस्तवस्तुपूरणात् तत्समष्टिरूपा त्रिपुरा नाम पराशक्तिराविर्भूता, इत्याह – इत्थं त्रितयपुरीया इति,



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्थं पूर्वोक्तप्रकारेण त्रितयानि अवयवानि पुराणि शरीराणि यस्याः सा, अत एव तुरीयस्य पीठा – त्रिविधात्मकसर्वप्रपञ्चाविर्भावतिरोभावभूरित्यर्थः ॥ १३–१४ ॥

इतः परं, तस्मात् गगनसमीरणदहनोदकभूमिवर्णसंभूतिरिति प्रथमसृष्टप्रपञ्चभूतनिष्ठगुणवर्णनद्वारा अक्षरसंख्याविशिष्टमहामन्त्रात्मकदेवतास्वरूपं वक्तुमारभते

---

शब्द-स्पर्शौ रूपं
रस-गन्धौ चेति भूतसूक्ष्माणि ।
व्यापकमाद्यं व्याप्यं
तूत्तरमेव क्रमेण पञ्चदश ॥ १५ ॥

---

पञ्चदशाक्षररूपा
नित्या चैषा हि भौतिकाभिमता ।
नित्याः शब्दादिगुण-
प्रभेदभिन्नास्तथानया व्याप्ताः ॥ १६ ॥

---

नित्यास्तिथ्याकारा-
स्तिथयश्च शिवशक्तिसमरसाकाराः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दिवसनिशामय्यस्ताः
श्रीवर्णास्तेऽपि तद्वयीरूपाः ॥ १७ ॥

---

शब्द आकाशगुणः, स्पर्शो वायुगुणः, रूपं तेजोगुणः, रसोऽपां गुणः, गन्धः पृथ्वीगुणः, आकाशमारभ्य एते गुणाः पृथ्वीपर्यन्तम् उत्तरोत्तरम् एकैकगुणाधिक्येन पञ्चदश गुणाः संपद्यन्ते, एतेषां गुणानां पञ्चदशभावेन श्रीविद्या पञ्चदशाक्षरी जाता । भौतिकाभिमता भूतसंबन्धित्वेन अभिमता इष्टा । अत एव पञ्चदशाक्षररूपा स्वस्मात् आदिभूतगुणानां पञ्चदशत्वात् विद्याक्षराणामपि पञ्चदशत्वम् तद्रूपा तत्स्वरूपिणी । नित्या कूटस्था तरङ्गबुद्बुदफेनानाम् अम्बुधिरिव सकलत्वाविर्भावभूमिरित्यर्थः । कूटस्थाया एव षोडश्याः पञ्चदशावयवात्मकपञ्चदशतिथिनिष्ठान्तः । पञ्चदशदेवतामयपञ्चदशाक्षरीरूपतामाह – नित्यास्तिथ्याकारा इति, नित्याः कामेश्वरप्रभृतिविश्रान्ताः, तिथ्याकाराः तिथ्यभिमानिन्यो देवताः । तिथयश्च प्रतिपत्प्रभृतिपूर्णिमान्ताः, शिवशक्तिसमरसाकाराः प्रकाशविमर्शसंपुटाकाराः । अत एव दिवसनिशामय्यः – दिवारात्रिरूपाः प्रकाशविमर्शयोर्दिवारात्रिमयत्वात्, तास्तिथयः श्रीवर्णाः, तेऽपि तेन पूर्वोक्तरूपेण पञ्चदशरूपाः श्रीवर्णाः – विद्यान्तर्गतवर्णगुणा अपि तद्वयी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रूपाः तादृशप्रकाशविमर्शरूपा इत्यर्थः । अयमत्र विवेकः — इयमेव प्रकाशविमर्शमयी परा शक्तिः पञ्चभूतात्मिका उत्तरोत्तरवृद्धिद्वारा पञ्चदशसंख्याकमात्राक्षरतिथ्यभिमानदेवतास्वरूपिणी जाता । यथागमः

'एक एव प्रकाशाख्यः परः कोऽपि महेश्वरः ।
यस्य शक्तिर्विमर्शाख्या सा नित्या गीयते बुधैः ॥
विमर्शाख्या च सा देवी पाञ्चविध्यं समागता ।
आकाशानिलसप्तार्चिःसलिलावनिभेदतः ॥
एकैकगुणवृद्ध्या तु तिथिसंख्यात्वमागता ।
विमर्शरूपिणी विद्या षोडशी या प्रकीर्तिता ।
गता सा षोडशैर्भेदैस्त्रिपुरा परमेश्वरी ॥
सुन्दर्यादिमह·······वां विचित्रान्तं समन्ततः ।
स्वागमादेव बोद्धव्यमिति संकल्पमात्रतः ॥ '

इति ॥ १५ ॥ १६ ॥ १७ ॥

उक्तमेव अर्थं द्रढयितुं देवतावत् विद्याया अपि विश्वात्मकत्वं तदुत्तीर्णत्वं च वक्तुमाह

---

स्वर-व्यञ्जन-बिन्दुत्रय-
समष्टिभेदैर्विभाविताकारा ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षट्त्रिंशत्तत्त्वात्मा
तत्त्वातीता च केवला विद्या ॥ १८ ॥

विद्यापि तादृगात्मा
सूक्ष्मा सा त्रिपुरसुन्दरी देवी ।
विद्यावेद्यात्मकयो-
रत्यन्ताभेदमामनन्त्यार्याः ॥ १९ ॥

स्वराः अचः, व्यञ्जनानि हलः, बिन्दुत्रयम् अनुस्वारत्रयम्, एषां समष्टिः समुदायभावः, भेदोऽवयवभावः तैर्विभाविताकारा उद्भावितस्वरूपा । अत एव षट्त्रिंशत्तत्त्वात्मा शिवादि-क्षित्यन्तविग्रहा । तत्त्वातीता च – तत्त्वसंघसमुदायस्थानत्वात् तदुत्तीर्णा च । अत एव केवला स्वव्यतिरिक्तस्य अभावात् एकाकिनी । एवंभूता विद्या श्रीपञ्चदशाक्षरीत्यर्थः । अयमत्र विद्यायामवयवविभागप्रकारः, – इह पुण्यानन्दाः हादिविद्यायाम् अत्यन्ताभिमानिनोऽस्या एव विद्याया अवयवभावसमुदायम् आश्रित्य तत्त्वात्मकत्वं तदुत्तीर्णत्वं चाचक्षते । तत्र च वाग्भवाख्ये प्रथमखण्डे पञ्च स्वराः सप्त व्यञ्जनानि संहत्य द्वादश वर्णाः । कामराजाख्ये द्वितीयखण्डे षट् स्वराः अष्ट व्यञ्जनानि संभूय चतुर्दश वर्णाः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शक्त्याख्ये तृतीयखण्डे च चत्वारः स्वराः षट् व्यञ्जनानि संहत्य दश वर्णाः । सर्वेऽपि संभूय षट्त्रिंशदक्षराणि अवयवरूपाणि समुदायरूपाणि । विद्या सर्वतत्त्वातिक्रान्ता सर्वत्र प्रसिद्धा श्रूयते, कादेरपि विद्याया उभयात्मकत्वम् अस्त्येव, यया नैव अनयोर्विद्ययोर्भेदः । हादौ प्रथमखण्डे पञ्च स्वराः सप्त व्यञ्जनानि संहत्य विद्याद्वयेऽपि प्रथमखण्डे द्वादशवर्णत्वं समानं, तस्मात् उभयात्मकत्वम् उभयोर्विद्ययोरस्त्येव । तदुभयविद्योपासनप्रकारस्तु गुरुमुखादेव अवगन्तव्यः । देवताया अपि मन्त्रवत् उभयात्मकत्वम्, इति मन्त्रदेवतयोरैक्यम् आह – 'विद्यापि तादृगात्मा' इति – विद्या चिदानन्दस्वरूपिणी तादृगात्मिका तदुत्तीर्णा च सूक्ष्मा परिच्छेत्तुम् अशक्या, सा सर्ववेदान्तेषु प्रसिद्धा त्रिपुरसुन्दरी, त्रिपुरा च सुन्दरी त्रिधावस्थितसमस्तवस्तुपूरणात् सर्वयोगिभिरुपास्यत्वेन स्पृहणीयत्वाच्च, त्रिपुराशब्दनिर्वचनं च पूर्वमेव प्रपञ्चितम् । देवी स्वच्छप्रकाशरूपा विश्वस्य जननादिक्रियारूपा परा वाक्, विद्यावेद्यात्मकयोरत्यन्ताभेदम् आमनन्त्यार्याः परमेश्वरप्रमुखाः सर्वयोगिन इत्यर्थः ॥ १९ ॥

एवं विद्यादेवतयोरभेदम् उक्त्वा, चक्रदेवतयोरैक्यं वक्तुं चक्रोत्पत्तिप्रकारम् आह

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

या सान्तरोहरूपा
परा महेशी त्रिभाविता सैव ।
स्पष्टा पश्यन्त्यादि-
त्रिमातृकात्मा चक्रतां याता ॥ २० ॥

---

चक्रस्यापि महेश्या
न भेदलेशोऽपि भाव्यते विबुधैः ।
अनयोः सूक्ष्माकारा
परैव स्थूलयोश्च न कापि भिदा ॥ २१ ॥

---

या सान्तरोहरूपा इति—अन्तरम् अन्तःकरणं तस्मिन् ऊहः वितर्कः इत्थमिति परिच्छेदरहितः तेन सहितं रूपं यस्याः सा । अयमर्थः—अवाङ्मनसगोचरत्वात् सर्ववेदान्तैरपरिच्छेद्या सर्वकारणभूता शिवादि-धरण्यन्ततत्त्वसंघाताविर्भावभूमिः महेश्वरी परा सर्वोत्कृष्टा इत्युच्यते । श्रुतिश्च

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।

एवंभूतलक्षणा सैव—पराशक्तिरेव, त्रिभाविता त्रिप्रकारत्वेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भाविता संज्ञायमाना, एतदेवाह – स्पष्टा पश्यन्त्यादित्रिमातृकात्मा इति, स्पष्टा प्रथमोत्पन्नत्वेन विवक्षिता विषयिणी पश्यन्तीति उच्यते आदिशब्देन मध्यमा वैखरी च, सैव वैखरी नाम अभिलापरूपिणी पञ्चदशाक्षरराशिमयी सर्ववैदिकलौकिकशब्दनात्मिका शक्तिरित्युच्यते । तथा च सुभगोदयवासनायाम्

'परा भूर्जन्म पश्यन्ती वल्लीगुच्छसमुद्भवा ।
मध्यमा सौरभा वैखर्यक्षमाला जयत्यसौ ॥'

एवंरूपत्रिमातृकात्मिका सैव चक्रतां याता – त्रिखण्डात्मकचक्रैक्यमिवाप्ता इत्यर्थः । एतदेवाह – चक्रस्य इति, चक्रस्य त्रैलोक्यमोहनादि-वैन्दवान्तनवावरणात्मकस्य सुन्दर्यधिष्ठानभूतस्य, महेश्यास्तदधिष्ठात्र्याः सुन्दर्याश्च भेदलेशः ईषद्भेदोऽपि बुधैर्माहेश्वरैर्न भाव्यते न अनुभूयते, कुतः? – श्रीसुन्दरीरूपत्वात् श्रीचक्रस्य । पुनरपि अनयोस्तादृगभेदम् आचष्टे – अनयोः सूक्ष्माकारा इत्यादिना, अनयोः सूक्ष्मरूपयोश्चक्रदेवतयोः – सूक्ष्मरूपत्वं नाम अपरिच्छिन्नत्वमेव, तत्र श्रीचक्रस्य सूक्ष्मरूपेण अवस्थानं बिन्द्वात्मना, बिन्दोश्च अपरिच्छिन्नत्वं 'वैन्दवे परमाकाशे' इत्यादिना प्रपञ्चितमेव । देवताया अपि 'विद्यापि तादृगात्मा' इत्यादिना अभिहितमेव । तथा स्थूलयोश्चक्रदेवतयोश्च, अत्र स्थूलत्वं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाम चक्रस्य त्रिकोणादिचतुरश्रपर्यन्तं विजृम्भणम्, देवताया अपि त्रिपुराम्बिकादि-त्रिपुराशक्त्यन्तरूपेण मननम्, एवंविधयोश्चक्रदेवतयोः, भिदा – भेदः कारणादित्यर्थः। तत्र हेतुमाह – परैव सूक्ष्माकारा इति, सा पूर्वोक्तलक्षणा परैव आदिशक्तिरेव सूक्ष्माकारा सूक्ष्मभूत आकारः स्वरूपमनयोरित्यर्थः ॥ २० ॥ २१ ॥

देवतारूपस्य चक्रस्य इतः परं परा-पश्यन्त्यादिशक्तिविकासरूपं नवयोन्यात्मकं श्रीचक्रं वक्तुम् आदौ बैन्दवं सर्वानन्दमयाख्यचक्रं पराशक्तिमयम्, इत्याह

---

मध्यं चक्रस्य स्यात्
परामयं बिन्दुतत्त्वमेवेदम्।
उच्छूनं तच्च यदा
त्रिकोणरूपेण परिणतं स्पष्टम् ॥२२॥

---

एतत्पश्यन्त्यादि-
त्रितयनिदानं त्रिबीजरूपं च।

---



SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI,
Acc. No. ..................
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चक्रस्य नवयोन्यात्मकस्य, मध्यं मध्येभवं, बिन्दुतत्त्वं बिन्दुस्वरूपं पूर्वमेव व्याख्यातम् । इदं स्वसाक्षात्कृतं परामयमेव पराशक्तिस्वरूपमेव इत्यर्थः । एतदेव बिन्दुतत्त्वं यदा विकासभावम् एति तदा त्रिकोणचक्रम् उदेति इत्याह—उच्छूनं तच्च यदा इति, यदा यस्मिन् काले प्राणिनाम् अदृष्टवशात् उच्छूनं, तच्च—बैन्दवमपि उच्छूनं संजातविकासं भवति, तदा त्रिकोणरूपेण—अनुत्तरानन्देच्छासंघट्टरूपेण परिणतं, त्रिकोणाकारं भवति इत्यर्थः । एतत्—त्रिकोणचक्रं, पश्यन्त्यादित्रितयनिदानं—पश्यन्ती-मध्यमा-वैखरीप्रमुखशक्तित्रयोत्पत्तिकारणमित्यर्थः । तथाह

'इच्छाशक्तिस्तथा वामा पश्यन्तीवपुषा स्थिता ।
ज्ञानशक्तिस्तथा ज्येष्ठा मध्यमा वागुदीरिता ॥
ऋजुरेखामयी विश्वस्थिता प्रथितविग्रहा ।
तत्संहृतिदशायां तु बैन्दवं रूपमास्थिता ॥
प्रत्यावृत्तिक्रमेणैव शृङ्गाटवपुरुज्ज्वला ।
क्रियाशक्तिस्तु रौद्रीयं वैखरी विश्वविग्रहा ॥'

इति । त्रिबीजरूपं च इति,—त्रिबीजानि त्रिखण्डात्मकानि वाग्भव-कामराज-शक्तिबीजानां रूपं यस्य तत् ॥ २२ ॥

ततः श्रीभट्टारिकायामेव बिन्दुतत्त्वम् ऊर्ध्वाधोमुखनवयोन्यात्मकश्रीचक्रमभवत्, इत्याह

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वामा ज्येष्ठा रौद्री
चाम्बिका चानुत्तरांशभूताः स्युः॥२३॥

---

इच्छा-ज्ञान-क्रिया-
शान्ताश्चैतास्तथोत्तरावयवाः ।
व्यस्ताव्यस्तं तदर्ण-
द्वयमिदमेकादशात्म पश्यन्ती ॥२४॥

---

वामा ज्येष्ठा रौद्री अम्बिका चकारात् पराशक्तिश्च इमाः पञ्चशक्तयः, अनुत्तरांशभूताः – अनुत्तरांशत्वेन श्रीचक्रान्तर्गताधोमुखपञ्च-त्रिकोणाकृतित्वेन भूता जाता इत्यर्थः। इच्छा-ज्ञान-क्रिया-शान्ताः एताश्चतस्रः शक्तयः उत्तरावयवाः ऊर्ध्वमुखत्रिकोणचतुष्टयरूपाः। अयं भावः–पराविलसनरूपा एताः रौद्री-वामा-ज्येष्ठा-अम्बिकाः, इच्छा-ज्ञान-क्रिया-शान्ताश्चैतास्तथोत्तरावयवाश्च इति, एतच्छक्तिनवकमयं नवत्रिकोणं चक्रमिति । व्यस्ताव्यस्तं तदर्णद्वयं – व्यस्तं व्यष्टिरूपम् अव्यस्तं समष्टिरूपं सर्वोपनिषत्प्रसिद्धमर्णद्वयं संदंशन्यायेन अखिलाक्षरात्मकमन्त्रमयप्रकाशविमर्शरूपपूर्णाहन्ताभावगर्भकामकलाक्षरात्मबिन्दुतत्त्वमित्यर्थः । एवंभूतं तदर्णद्वयम् एका-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दशात्म, मत्या विचार्यमाणमेकादशविधं भवति इत्यर्थः। परादि-शान्तान्तं शक्तिदशकं व्यष्टिरूपं सर्वसमष्टिरूपत्वेन चैकं, तेन एकादशात्मकम् इदं बिन्दुतत्त्वमेव पश्यन्तीकारणम् ॥ २३ ॥ २४ ॥

इतः परं वसुकोण-दशारादिसृष्टिचक्रप्रकारम् अभिधातुं परमप्रकृतत्रिकोणचक्रक्रमं निगमयति

---

एवं कामकलात्मा
त्रिबिन्दुतत्त्वस्वरूपवर्णमयी ।
सेयं त्रिकोणरूपं
याता त्रिगुणस्वरूपिणी माता ॥२५॥

---

एका परा.................

एवं–पूर्वोक्तप्रकारेण, कामकलात्मा–कामः प्रकाशैक-स्वभावोऽनुत्तराक्षरात्मा परमशिवः कला तु अखिलवाणी-रूपपरमाहम्-अक्षरमयी विमर्शविग्रहा, एवं तदुभयात्मकत्वं नाम स्वाभाविकपरिपूर्णाहंभावशालित्वम्। एतच्च 'बिन्दुरहं-कारात्मा' इत्यत्र स्पष्टम् अभिहितम्, एवंरूपा कामकलात्मा त्रिबिन्दुतत्त्वस्वरूपवर्णमयी–बिन्दवः पूर्वोक्तरक्त-शुक्ल-मिश्रा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

त्मानः तेषां भावः तत्त्वं तत्स्वरूपा ये वर्णा वाग्भवादय-स्तदात्मिका । तथा रहस्याम्नाये

'विन्दुत्रयात्मकं स्वात्मशृङ्गाटं विद्धि सुन्दरम् ।
मिश्रं शुक्लं च रक्तं च पुराणं प्रणवात्मकम् ॥
रेखात्रयावगन्तव्यं संविन्मात्रं शिवात्मकम् ।'

सेयं त्रिकोणरूपम् आपन्ना चिदानन्दघनरसपरमार्था सकलाम्नायसारभूता, विश्वाहंभावभावनाशालिभिर्महायोगिवरैरात्मसाक्षात्त्वेन अनुभूयमाना, त्रिगुणा इच्छा-ज्ञान-क्रिया-शक्तिमयी, एवं तथा, अत एव सर्वजगन्निर्मात्री एका । तथा च वचनम्

'अनुत्तरानन्दचिती इच्छाशक्तौ नियोजिते ।
त्रिकोणमिति तत्प्राहुर्विसर्गामोदसुन्दरम् ॥'

इति ॥ २९ ॥

इतः परं विलसनरूपायाः पश्यन्त्या अपि नवयोनिचक्रात्मना नवात्मकत्वमाह

---

............तदन्या
वामादिव्यष्टिमात्रसृष्ट्यात्मा ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तेन नवात्मा जाता
माता........................ ॥

---

तदन्या पराविकासभूता पश्यन्ती, वामादिव्यष्टिमात्रसृष्ट्यात्मा – वामादि-शान्तादिशक्तिनवकमयी, यतः तेन कारणेन सा, माता – पश्यन्ती नाम जननी, नवात्मा – वामादि-शान्तान्तशक्तिकदम्बकाविर्भावकारणनवयोनिचक्रात्मिका, जाता प्रादुर्भूता इत्यर्थः। अत्र वामादिशक्तीनां प्रसङ्गात् किंचित् उच्यते, – तत्र वामा नाम शृङ्गाटान्तःस्थितप्रपञ्चवमनात् विश्वजनयित्रीत्यभिधीयते, ज्येष्ठा सर्वमङ्गलकारिणी, रौद्री सर्वरोगविद्राविणी, समस्तेष्टप्रदा शक्तिरम्बिका च

'सा स्फुरत्ता महासत्ता'

इति प्रत्यभिज्ञास्थित्या सर्वातिशायिनी परावाक् परिपूर्णस्वरूपस्वात्मस्फुरणावलोकनचतुरा, इच्छा-ज्ञान-क्रियाशक्तयस्तु पश्यन्ती-मध्यमा-वैखरीरूपाः, आह चतुर्थी शान्ता, चतुःशत्यां,

'शान्ता च निष्कलं शान्तम्'

इत्यादिश्रुत्या ॥ २६ ॥

अनन्तरं मध्यमाया अपि प्रकारान्तरेण नवात्मकत्वं ब्रूते

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

''सा मध्यमाभिधानाभ्याम् ॥२६॥

---

द्विविधा मध्यमा सा
सूक्ष्म-स्थूलाकृतिः स्थिता सूक्ष्मा ।
नवनादयमी स्थूला
नववर्णात्मा च भूतलिप्याख्या॥२७॥

---

आद्या कारणमन्या
कार्यं त्वनयोर्यतस्ततो हेतोः ।
सैवेयं नहि भेद-
स्तादात्म्यं हेतुहेतुमदभीष्टम् ॥ २८ ॥

---

मध्यमा परापश्यन्त्योः समरसावस्थे, अभिधानाभ्यां नामधेयाभ्यां सा, अतः सुखं परमयोगिभिर्दृश्या मध्यमा नाम शक्तिः द्विविधा द्विप्रकारा – स्थूल-सूक्ष्मभावात्, तत्र सूक्ष्मा समाधिबलेन अनुभूयमाना, स्थूलाकृतिः पण्डितपामराद्यभिलपनयोग्या वर्णावल्यास्थिता सर्वदा वर्तमाना । एतदेव व्याचष्टे 'सूक्ष्मा नवनादमयी स्थूला नववर्णात्मा' इति ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमर्थः – मित्रावरुणसदनात् वायुनिरोधनेन स्वाधिष्ठानादिकमलभेदपुरःसरं द्वादशान्तारविन्दासनस्थपरमशिवाङ्कम् उपसर्पन्ती महामातृका कुण्डलिनी बहुविधनादात्मिका या अनुभूयते, सा समाधिसमधिगतसर्वार्थैर्महामाहेश्वरैः स्वात्मत्वेन मन्यते । नवनादमयी इति, – चिणीति प्रथमः, चिणिचिणीति द्वितीयः, घण्टानादस्तृतीयः, शङ्खनादश्चतुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्तालनादः, सप्तमो वेणुनादः, अष्टमो भेरीनादः, नवमो मृदङ्गनादः । भूतलिप्याख्या – भूताश्च ते लिपयश्च भूतलिपयः, अत्र लिपीनां भूतत्वम् चेष्टाविशेषाक्षरन्यासाभिव्यङ्ग्यत्वम्, तच्च कल्पनामात्रमेव – अक्षराणां तेजोरूपशक्त्यात्मकत्वात् तेषामाख्या अभिधा यस्याः, सूक्ष्मरूपा हि मध्यमा स्थूलरूपायाः कारणभावम् आपन्ना एका एव, इत्यत आह – आद्या कारणमित्यादि, आद्या पूर्वोक्ता सूक्ष्मा कारणं – प्रथमोद्भवात्, अन्या स्थूला कार्यं – तज्जन्यत्वात्, यतः तस्मात् कारणात् अनयोः सूक्ष्म-स्थूलयोः कार्यकारणभावः, ततो हेतोः – तेन कारणेन, इयं स्थूला सैव सूक्ष्मा शक्तिरेव, नहि भेदः – भेदो नास्त्येव । ननु कथम् अभेदे कार्यकारणभावः? इत्यत्राह – तादात्म्यमिति, तादात्म्यं – भेदाभेदरूपं, हेतुहेतुमत् – जन्यजनकरूपम्, अभी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ष्टम्—मृद्घटवत् वाचारम्भणमात्रत्वात् एकमेव वस्तु उभय-विधं भवति सर्ववेदान्तसंमतमित्यर्थः ॥ २७ ॥ २८ ॥

अनन्तरं मध्यशृङ्गाटतेजःप्रसरणात्मकवसुकोणादिचक्रनि-रूपणद्वारा वैखरीशक्त्याविर्भावम् आह

---

श-ष-स-पवर्गमयं
तद्वसुकोणं मध्यकोणविस्तारः ।
नवकोणं मध्यं चे-
त्यस्मिंश्चिद्दीपदीपिके दशके ॥२९॥

---

श-ष-स-पवर्गमयं,—श-ष-स-पवर्गात्मकाष्टकोणस्य विस्तारो विकासभूतः, तत्तादृशमध्यत्रिकोणसहितं नवकोणं मध्यं च बैन्दवाख्यं संहृत्य दशके अस्मिंस्त्रिकोण-वसुकोणचिद्दीपदीपिके

'बैन्दवासनसंरूढसंवर्तानलचिद्घनम् ।'

इत्युक्तरीत्या बिन्दुचक्राधिरूढायास्तेजोभूते—त्रिपुरायाः प्रभा-पटलप्रकाशिते इत्यर्थः ॥ २९ ॥

---

तच्छायाद्वितयमिदं
दशारचक्रद्वयात्मना विततम् ।

---

5

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तस्य पूर्वोक्तस्य तेजोराशिमयस्य चक्रत्रितयस्य, च्छाया-द्वितयं कान्तिद्वितयं—सर्वरक्षाकर-सर्वार्थसाधकाभिधचक्रद्वया-त्मना परिणतम् इत्यर्थः । तथा च उक्तम्

'नवत्रिकोणस्फुरितप्रभारूपदशारकम् ।'

इति ॥

तच्चक्रद्वयस्वरूपं व्याचष्टे

---

त-ट-च-कवर्गचतुष्टय-
विलसनविस्पष्टकोणविस्तारम् ॥३०॥

---

तवर्ग-टवर्गात्माक्षरदशकरूपम् अन्तर्दशारम्, चवर्ग-कव-र्गात्मकाक्षरदशाररूपम् बहिर्दशारमित्यर्थः ॥ ३० ॥

---

एतच्चतुष्कप्रभया
समुपेतं दशारपरिणामः ।

---

एतच्चक्रचतुष्कस्य—बिन्दु-त्रिकोण-वसुकोणान्तर्दशारात्म-कचक्रचतुष्कस्य प्रभा कान्तिस्तया, समुपेतं संयुक्तं, दशारप-रिणामः—बहिर्दशारचक्रमिति यावत्, बहिर्दशारचक्रस्य बै-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न्दवादिचक्रचतुष्टयसंनिधानादेव तात्पर्यं, तत्तत्प्रभा व्याप्नोति इत्यर्थः। तथा च उक्तम्

'चतुश्चक्रप्रभारूपसंयुक्तपरिणामतः।'

इति ॥

अथ एतच्चक्रचतुष्कस्य त्रिकोण-वसुकोण-दशारद्वयरूपस्य स्वरूपमाह

---

आदिस्वरचतुर्दश-
वर्णमयाश्रं चतुर्दशारमभूत् ॥ ३१ ॥

---

अकारादिचतुर्दशवर्णात्मचतुर्दशकोणसहितं सर्वसौभाग्यदायकाभिधं चक्रमित्यर्थः ॥ ३१ ॥

एवं बैन्दवादिमनुकोणान्तपर्यन्तचक्रवर्णनद्वारा वैखरीशक्तिराविर्भूता इत्याह

---

परया पश्यन्त्यापि च
मध्यमया स्थूलवर्णरूपिण्या।
आभिरेकोनपञ्चा-
शदक्षरात्मा वैखरी जाता ॥ ३२ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयमर्थः — आदि-क्षान्ताक्षरराशिमयाखिलप्रपञ्चनिर्मात्री सर्वशब्दात्मिका वैखरी इति ॥ ३२ ॥

इतः परं सर्वसंक्षोभण-सर्वाशापरिपूरकाभिधचक्रद्वयं वैखरीवर्णात्मकमेव, — इत्याह

---

कादिभिरष्टभिरुपचित-
मष्टदलाब्जं च वैखरीवर्गैः ॥
स्वरगणसमुदितमेतद्
द्व्यष्टदलाम्भोरुहं च संचिन्त्यम् ॥३३॥

---

वैखरीवर्गैः — वैखरीशक्तिस्वरूपैः, अष्टभिः कादिभिः, उपचितं — सम्यक् प्रोतम्, अष्टदलाब्जं च — सर्वसंक्षोभणचक्रम् । तथा स्वरगणसमुदितम् — स्वरगणैः अकारादिषोडशवर्णैः, समुदितं सम्यक् भावितम्, एतत् — परिदृश्यमानं, द्व्यष्टदलाम्भोरुहं — सर्वाशापरिपूरकचक्रम्, संचिन्त्यम् — सदा भावनीयम् इत्यर्थः ॥ ३३ ॥

---

बिन्दुत्रयमयतेज-
स्त्रितयविकारं च तानि वृत्तानि ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूबिम्बत्रयमेतत्
पश्यन्त्यादित्रिमातृविश्रान्ति ॥ ३४ ॥

---

तानि वृत्तानि — मन्वश्रोपरि अष्टदलपद्मोपरि षोडशदलपद्मोपरि च स्थितानि, बिन्दुत्रयं — पूर्वोक्तरक्तशुक्लमिश्रात्मकं, तन्मयं यत् तेजस्त्रितयं — सोम-सूर्याग्निरूपं, तद्विकारस्तन्मयानि इत्यर्थः। तत्र वृत्तस्थतेजस्त्रयात्मकत्वकथनेन सोमसूर्यानलत्रिखण्डमयत्वं चक्रस्योक्तं, तद्विकारश्चेति तानि वृत्तानि, 'वेदाः प्रमाणम्' इति-वत् द्रष्टव्यम्। भूबिम्बत्रयम् — अणिमादि-ब्राह्म्यादि-सर्वसंक्षोभिणीमुद्रादिशक्तिकदम्बकवासनाभूतं, पश्यन्त्यादित्रिमातृविश्रान्ति — पश्यन्ती-मध्यमा-वैखरीशक्तय एतावत्पर्यन्तं विजृम्भमाणाः त्रिकोणादि-भूपुरपर्यन्तश्रीचक्रात्मना चकासत इत्यर्थः। एतच्च 'आत्मनः स्फुरणम्' इत्यारभ्य 'वैखरी विश्वविग्रहा' इत्यन्तेन ग्रन्थजालेन सम्यक् ईरितम् ॥ ३४ ॥

एवं 'मध्यं चक्रस्य स्यात्' इत्यादि उपक्रम्य 'पश्यन्त्यादित्रिमातृविश्रान्ति' इत्यन्तं श्रीमहात्रिपुरसुन्दर्याः श्रीचक्रं सम्यक् निरूप्य, अनन्तरं 'अणिमादिभूतयोऽस्याः' इत्यन्तं तस्या आवरणचक्रान्तर्गतशक्तिनिकुरम्ब-तन्निकटस्थितश्रीगुरुमण्डलमपि श्रीदेव्यवयवपरिणतिरूपमेव, इत्याह

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्रमणं पदविक्षेपः
क्रमोदयस्तेन कथ्यते द्वेधा ।
आवरणं गुरुपङ्क्ति-
द्वयमिदमम्बापदाम्बुजप्रसरम् ॥ ३५ ॥

---

क्रमणं पदक्रमः, स च द्विविधः – पदविक्षेपरूपः क्रमोदयरूपश्च, तत्र पदविक्षेपो नाम सुन्दर्यश्रानन्तकोटिकिरणात्मकानन्तशक्तिजननसामर्थ्यं, क्रमोदयो नाम दिव्य-सिद्ध-मानवौघरूपानन्तप्रकाशात्मकश्रीगुरुमण्डलात्मकतया प्रसरणम् । एतद्वृन्दचक्रद्वयं विवृणोति – आवरणमिति, आवरणचक्रस्थितशक्तिनिकुरम्बं 'मञ्चाः क्रोशन्ति' इतिवत् । गुरुपङ्क्तिः – गुरुमण्डलम्, इदं द्वयम्, अम्बापादाम्बुजप्रसरम् – अम्बायास्त्रिपुरायाः पादाम्बुजस्य श्रीपादयुगस्य प्रसरः प्रसरणं विजृम्भणम् इति यावत् ॥ ३५ ॥

तत्प्रसारप्रसरणीं क्रमशो विवृणोति

---

सेयं परा महेशी
चक्राकारेण परिणमेत यदा ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद्देहावयवानां
परिणतिरावरणदेवताः सर्वाः ॥ ३६ ॥

---

आसीना बिन्दुमये
चक्रे सा त्रिपुरसुन्दरी देवी ।
कामेश्वराङ्कनिलया
कलया चन्द्रस्य कल्पितोत्तंसा ॥ ३७ ॥

---

पाशाङ्कुशेक्षुचाप-
प्रसूनशरपञ्चकाञ्चितस्वकरा ।
बालारुणारुणाङ्गी
शशिभानुकृशानुलोचनत्रितया ॥ ३८ ॥

---

सेयम् अपरिच्छिन्नानन्ततेजोराशिमयी परा सर्वोत्कृष्टा अनन्तकोटियोगिनीवृन्दसमाराधितनित्यनिरवधिकातिशयानन्दमयात्मसाम्राज्यसंपदभिमानशालिनी चक्राकारेण

'चक्रं नवात्मकमिदं नवधा भिन्नमन्त्रकम् ।'

इति बैन्दवादित्रैलोक्यमोहनान्तचक्रनवकात्मना,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'स्फुरत्तामात्मनः पश्येत्....।'

इति पूर्णानन्दमयात्मावलोकनसमये परिणमेत आकारान्तरेण, तद्देहावयवानां – तस्यास्त्रिपुरायाः देहः तेजःपुञ्जात्मकः, तथा अवयवाः किरणाः, तेषां परिणतिः अवस्थान्तरापत्तिः। इह आवरणदेवताः – वशिन्याद्यणिमाद्यनन्तशक्तिनिकुरम्बं चिदानन्दसमुद्रात्मकमेव सकाशत्वे फेन-बुद्बुद-तरङ्गादिवत् अनन्तकोटिशक्तयः प्रादुर्भावतिरोभावौ भजन्ति, इत्यर्थः।

आसीनेत्यादि, बिन्दुमये सर्वानन्दाख्यपरमाकाशे –

'बैन्दवे परमाकाशे'

इत्युक्तत्वात् इत्यर्थः। चक्रे – आत्मसंक्रमविहारपीठे, आसीना उपरि प्रदेशे विराजमाना, सा देशकालाकारानवच्छिन्ना तत्स्वरूपिणी, त्रिपुरसुन्दरी सर्वकारणत्वेन स्पृहणीया स्वच्छा वा, कामेश्वराङ्कनिलया – कामेश्वरस्य श्रीनाथस्य, अङ्कं वामोरुभागः, निलयः आवासस्थानं यस्याः सा। तथोक्तं परमशिवेन

'कला विद्या पराशक्तिः श्रीचक्राकाररूपिणी।
तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी॥
सदाशिवेन संपृक्ता सर्वतत्त्वार्थगर्भिणी।'

इत्यादि। देवी विश्वसृजनादिव्यापारविनोदिनी, पाशः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वात्मभेदबन्धन इच्छाशक्तिस्वरूपः, अङ्कुशः स्वरूपभेददलनोपायात्मकः ज्ञानशक्तिमयः, इक्षुचाप-पुष्पेपुपञ्चके स्वाभिन्नाकारावर्जिसाधनभूतक्रियाशक्तिस्वरूपे । अयमर्थः इच्छा-ज्ञान-क्रियाशक्तय एव तदाज्ञया पाशादिस्वरूपम् आपन्नाः तदुपासनम् आचरन्ति इत्यर्थः । तथा च

'इच्छाशक्तिमयं पाशं ज्ञानमङ्कुशरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥'

इति ॥ ३६ ॥ ३७ ॥ ३८ ॥

एतदेव दिव्यमिथुनं, दिव्यसिद्धाः – अविशेषभेदभिन्नगुरुमण्डलस्वरूपम् उपासत इत्याह

---

तन्मिथुनं गुणभेदाद्-
आस्ते बिन्दुत्रयात्मके त्र्यश्रे ।
कामेश्वरिमित्रेश्वरि-
प्रमुखद्वन्द्वत्रयात्मना विततम् ॥३९॥

---

तन्मिथुनं, तत्–सर्वातीतत्वेन सर्वोपनिषत्प्रसिद्धं कामकामेश्वरीरूपम् । अयमर्थः – परमात्मा हि स्वात्मानमेव स्त्रीपुंसमयं कृत्वा मिथुनरूपेण विहरते । प्रकाशविमर्शात्मना मिथुनी-

6

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूतः परमशिव एव सकलतन्त्रं समवतारयत्, इति । एवं च तत् मिथुनं कामकामेश्वरीरूपं — मित्रेश्वरी श्रीमदूर्ध्वदीपनाथः, वज्रेश्वरी ज्येष्ठानाथः, भगमालिनी मित्रदेवनाथः, एवमादि-मिथुनत्रयात्मना दिव्य-सिद्ध-मानवौघादिक्रमरूपेण विततं मिथुनत्रयं विसृतमित्यर्थः ॥ ३९ ॥

इतः परम् आवरणदेवतास्वरूपभावौ वर्णयति ।

---

वसुकोणनिवासिन्यो
 यास्ताः संध्यारुणा वशिन्याद्याः ।
पुर्यष्टकमेवेदं
 चक्रतनोः संविदात्मनो देव्याः ॥४०॥

---

वसुकोणनिवासिन्यः — सर्वरोगहराख्यचक्रनिवासशीलाः या वशिन्याद्या अष्ट शक्तयः पूर्णाहंभावानन्ददानसमर्थाः, कथमत्र रोगहरत्वं नाम पूर्णाहंभावप्रदत्वमेव

‘अपूर्णमन्यता व्याधिः कार्पण्यैकनिधानभूः ।’

इत्युक्तेः । एवं-भूताः ताः संध्यारुणाः अरुणाकारा भासन्ते इत्यर्थः । अत एव इदमष्टकोणचक्रं, संविदात्मनः — संवित् ज्ञानमेव आत्मा स्वरूपं यस्याः सा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'सत्यं ज्ञानमनन्तम्'

इति श्रुतेः

'स्वसंविन्त्रिपुरा देवी...............।'

इत्यागमाच्च, देव्याः

'बहु स्यां प्रजायेय'

इति विहरणस्वभावायाः, श्रीचक्रतनोः—चक्रात्मिकायाः सूक्ष्मपुर्यष्टकशरीरम् इत्यर्थः ॥ ४० ॥

---

तद्विषयवृत्तयस्ताः
सर्वज्ञादिस्वरूपमापन्नाः ।
अन्तर्दशारनिलया
लसन्ति शरदिन्दुसुन्दराकाराः ॥४१॥

---

तद्विषयवृत्तयः—वसुकोणनिकटवासिन्यः, ताः—वस्वाद्यात्मरूपरक्षणधारित्वेन प्रसिद्धाः, सर्वज्ञादिशक्तिदशकरूपं प्राप्ताः, अन्तर्दशारनिलयाः—सर्वरक्षाकराभिधेयचक्रसमारूढाः निगर्भयोगिन्यः, शरदिन्दुसुन्दराकाराः—स्वप्रकाशधवलाकृतयो लसन्ति—प्रकाशन्ते ॥ ४१ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तद्बाह्यपङ्क्तिकोणेषु
योगिन्यः सर्वसिद्धिदाः पूर्वाः ।
देवींधीकर्मेन्द्रिय-
विषयमय्यो विशदवेशभूषाढ्याः ॥४२॥

---

तद्बाह्यपङ्क्तिकोणेषु तस्य सर्वरक्षाकरचक्रस्य बाह्यभूतेषु उपरिस्थितेषु पङ्क्तिकोणेषु सर्वार्थसाधके चक्रे तस्य कोणात्मकत्वात् स्थिताः, योगिन्यः कुलकौलनामधेयाः, सर्वसिद्धिदाः, पूर्वाः – सर्वसिद्धिप्रमुखा दश शक्तयः, देवीधीकर्मेन्द्रियविषयमय्यः – देव्यास्त्रिपुरायाः धीकर्मेन्द्रियाणि तेषां विषयास्तन्मय्यस्तत्स्वरूपाः, विशदवेशभूषाढ्याः – विशदाः शुभ्राकारा वेशाश्च भूषाश्च तैराढ्याः । अयमर्थः – मन्त्रदेवतात्माभेदरूपसिद्धिदायिन्यः स्वच्छाकृतयः शुभ्राभरणा भासन्ते इत्यर्थः ॥ ४२ ॥

---

भुवनारचक्रभवना
देवीमनुकरणविवरणस्फुरणाः ।
संध्यासवर्णवसनाः
संचिन्त्याः संप्रदाययोगिन्यः ॥ ४३ ॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भुवनारचक्रं सर्वसौभाग्यदायकं चक्रं भवनम् आवासस्थानं यासां ताः, देवीमनुकरणानि – चतुर्दशकरणानि, ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, मनोबुद्ध्यहंकारचित्ताख्यानि चत्वारि तेषां विवरणं व्याख्यानभूतं स्फुरणं चतुर्दशाररूपं यासां ताः, देवी तु स्वयमेव चतुर्दशकरणात्मकचतुर्दशारचक्रदेवतात्मना स्थिता इत्यर्थः। संध्यायाः सवर्णं सदृशं वसनं वस्त्रं यासां ताः, संप्रदाययोगिन्यः आदिशक्तिमयत्वेन सत्संप्रदायवेद्याः सर्वसंक्षोभिणीप्रभृतयः, संचिन्त्याः सम्यक् भावनीयाः ॥ ४३ ॥

---

अव्यक्तमहदहंकृति-
तन्मात्राभीष्टविकृताङ्गनाकाराः ।
द्विरदच्छदनसरोजे
जयन्ति गुप्ततरयोगिनीसंज्ञाः ॥ ४४ ॥

---

अव्यक्तम् अव्यक्ताख्यं तत्त्वं, महत्तत्त्वम्, अहंकृतिः अहंकारतत्त्वं, तन्मात्राः पृथिव्यादिभूततन्मात्राः पञ्च, संहृत्य तु अष्ट, एतैरभीष्टं स्वीकृतमाकारं स्वरूपं यासां ताः – देव्यात्मिका इत्यर्थः, । गुप्ततरयोगिनीसंज्ञाः भूतदेव्या अत्यन्तान्त-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

रङ्गभूतत्वात् एतासामनङ्गकुसुमादीनां गुप्ततरेति संज्ञा । द्विरदच्छदनसरोजे सर्वसंक्षोभणाख्याष्टदलपद्मे, जयन्ति सर्वोत्कर्षेण वर्तन्ते ॥ ४४ ॥

---

भूतानीन्द्रियदशकं
मनश्च देव्या विकारषोडशकम् ।
कामाकर्षिण्यादि-
स्वरूपतः षोडशारमध्यास्ते ॥ ४५ ॥

---

भूतानि पृथिव्यादीनि, इन्द्रियदशकं, मनश्च, षोडशारं–सर्वाशापरिपूरकनामधेयं चक्रं, कामाकर्षण्यादिस्वरूपतः–कामाकर्षिण्यादिषोडशशक्त्याकारेण, अध्यास्ते अधितिष्ठति । सर्वाशापरिपूरके चक्रे एताः कामाकर्षण्यादिगुप्तयोगिन्यः सर्वात्मिका निवसन्ति इत्यर्थः ॥ ४५ ॥

---

मुद्रास्त्रिखण्डया सह
संविन्मय्यः समुच्छ्रिताः सर्वाः ।
आदिमहीगृहवासा
भासा बालार्ककान्तिभिः सदृशाः ॥४६॥

---

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आधारनवकस्था
नवचक्रत्वेन परिणतिं याताः ।
नवनाथशक्तयोऽपि च
मुँद्राकारेण ताश्चक्रे ॥ ४७ ॥

---

त्रिखण्डया सह त्रिखण्डाख्यमुद्रया साकं, समुच्छ्रिताः सम्यक् उच्छ्रिताः – सर्वोत्कर्षेण वर्तमानाः, आदिमहीगृहवासाः – आदिमचतुरश्रनिलयाः, भासा कान्त्या, बालार्ककान्तिभिः तरुणारुणरुचिभिः, सदृशाः तुल्याः, संविन्मय्यः चिद्घननिष्ठा इत्यर्थः । एतास्तु मुद्राः चतुरश्रादिबैन्दवान्तनवचक्राधिष्ठाननायिका इति परमशिवेन प्रपञ्चिताः । एतदेव विवृणोति आधारेत्यादि, आधारनवकं – मूलाधार-स्वाधिष्ठान-मणिपूरकानाहत-भ्रूमध्य-विशुद्धि-लम्बिकाज्ञा-बिन्दुरूपं यस्या उपासकरूपिण्याः संबन्धि, येन हेतुना नवचक्रत्वेन बैन्दवात्मना परिणतेन आकारेण, नवनाथशक्तयः नवमुद्राकारेण, परिणता जाता इत्यर्थः ॥ ४६ ॥ ४७ ॥

---

*मोचयन्ति ग्रहादिभ्यः पाशौघान्द्रावयन्ति च ।
मोचनं द्रावणं यस्मान्मुद्रास्ताः परिकीर्तिताः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्यास्त्वगादिसप्तक-
माकारश्चैवमष्टकं स्पष्टम् ।
ब्राह्म्यादिमातृरूपं
मध्यमभूबिम्बमेतदध्यास्ते ॥ ४८ ॥

---

अस्या देव्याः, त्वगादिसप्तकं – त्वगादिसप्तधातवः, आकारः स्वरूपं च, एवं-रूपमष्टकं – ब्राह्म्यादिमातृरूपं – ब्राह्म्याद्यष्टशक्तिस्वरूपं दधत् , मध्यमचतुरश्रे निवसति इत्यर्थः ॥ ४८ ॥

---

अणिमादिभूतयोऽस्याः
स्वीकृतकमनीयकामिनीरूपाः ।
विद्यान्तरगुणभावेन
फलभूता भूनिकेतनगाः ॥ ४९ ॥

---

अस्याः परमेश्वर्याः, अणिमाद्यष्टशक्तयः, विद्यान्तराणां हठयोगादीनां स्वीकृतानि कमनीयानि मनोहराणि कामिनीरूपाणि याभिस्ताः एवं-भूताः । गुणभावेन उपसर्जनीभावेन, भूनिकेतनगाः – सर्वान्तचतुरश्रे तिष्ठन्ति इत्यर्थः ॥ ४९ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत उत्तरं गुरुक्रमो गदितः इत्यन्तेन श्लोकचतुष्केण परमशिवान्तगुरुमन्त्रं शिष्यानुजिघृक्षया प्रतिपादयितुम् उपक्रमते

---

परमानन्दानुभवः
परमगुरुनिर्विशेषबिन्द्वात्मा ।
स पुनः क्रमेणाभिन्नः
कामेशत्वं ययौ चिद्विमर्शरूपम्॥५०॥

---

परमः सर्वोत्कृष्टः, आनन्दः परिपूर्णाहंभावरूपोऽनुभवः ज्ञानं यस्य, परमगुरुरित्यादि – परमगुरुरादिनाथः परमशिवः, तस्मात् आदिनाथात् निर्विशेषः अभिन्नो, बिन्दुः पूर्वोक्तकामकलारूपः स आत्मा स्वरूपं यस्य,........................

..............................................................

..............................................................

---

आसीनः श्रीपीठे
कृतयुगकाले गुरुः शिवो विद्याम् ।
तस्यै ददौ स्वशक्त्यै
कामेश्वर्यै विमर्शरूपिण्यै ॥ ५१ ॥

---

4

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सापीशा मित्रेश-
मुख्यान्स्वांशाञ्जेष्ठमध्यमालाख्यान् ।
चित्प्राणविषयरूपां-
स्त्रेतादियुगादिकारणत्रिगुरून् ॥ ५२ ॥

---

बीजत्रितयाधिपतीन्
परीक्ष्य विद्यां प्रकाशयामास ।
एतैरोघत्रितयम्
अनुग्रहीतुं गुरुक्रमो गदितः ॥ ५३ ॥

---

उदितः पुण्यानन्दा-
दिति कामकलाङ्गनाविलासोऽयम् ।
परमशिवभुजङ्गपाशा-
कर्षितचित्ताय कल्पते नित्यम् ॥ ५४ ॥

---

चित्तान्तरङ्गचपल-
तृष्णासलिलप्रपञ्चवाराशेः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. 5230



यदनुग्रहेण तीर्ण-
स्तस्मै श्रीनाथनाविकाय नमः ॥ ५५ ॥

---

.............................................................

.............................................................

.............................................................

---

इति श्रीपुण्यानन्दयतिविरचितः कामकलाविलासः समाप्तः ॥

---

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विविच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्-
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥

॥ तिलकम् ॥

---

श्रीशिवार्पणमस्तु ॥

---

शुभमस्तु साधकपाठकश्रोतृणाम् ॥

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY.
Jangamwadi Math, VARANASI.
Acc. No. 703
5230

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

